राष्ट्रियसंस्कृत-संस्थानान्तर्गत—
दिल्लीस्थ-श्रीलालबहादुरशास्त्रीकेन्द्रीयसंस्कृतविद्यापीठस्थ-
'अनुसन्धान-प्रकाशन-विभाग'-प्रवर्तिता

त्रैमासिक पत्रिका

# शोध-प्रभा

[अष्टमोऽङ्कः, जनवरी-फरवरी-मार्च १९७८ ई०]

प्रधान-सम्पादकः —
डॉ० सी० आर० स्वामिनाथः

सम्पादकः —
डॉ० रुद्रदेवत्रिपाठी

सहसम्पादक :—
डॉ० चक्रधरबिजल्वानः




प्रकाशन-स्थलम्
श्रीलालबहादुरशास्त्रीकेन्द्रीय-संस्कृत-विद्यापीठम्
१/६ शान्तिनिकेतनम्, नईदिल्ली-२१

SPD-417

आचार्य-श्रीमदमृतवाग्भव-प्रणीतं

# श्रीसिद्धमानवदर्शनम् ।

भगवत्या दर्शनार्थं गते मयि यदृच्छया ।
प्रद्युम्नपीठे काश्मीरे श्रीशारीपर्वताऽजिरे ॥ १ ॥
अकस्मान्मिलितः कोऽपि खेचरः सिद्धमानवः ।
भस्माच्छन्नो वह्निरिवाऽप्रतर्क्यज्ञानवान् महान् ॥ २ ॥
श्वेतोष्णीषो लम्बचोलस्तिलकाङ्कितभालवान् ।
नाऽतिस्थूलो नाऽतिह्रस्वो गौरश्यामच्छटान्वितः ॥ ३ ॥
उपविष्टः शाद्वलेयः पुमान् काश्मीरकाऽऽकृतिः ।
स्फुरतौष्ठेन मन्त्रादि-लक्ष्यमाणो जपन्निव ॥ ४ ॥
पञ्चस्तवी[१]श्लोकपाठं स्वरसौष्ठवमण्डितम् ।
आकर्ण्य मत्तः श्रवसोर्निषिञ्चन्तमिवामृतम् ॥ ५ ॥
समाप्तपाठं भूपृष्ठादुत्थितं गन्तुमुद्यतम् ।
अब्रुवन् हस्तसङ्केतान्मा गन्तुं स न्यवारयत् ॥ ६ ॥
आगत्य मत्सदेशे स प्रश्नान् कत्यपि पृष्टवान् ।
क्वत्यः कुतस्त्यः किं नाम जन्मभूः कैवमादिकान् ॥ ७ ॥
निरर्थकं प्रश्नजालं हित्वा ब्रूहि द्विजोत्तम ।
किमस्ति मयका कार्यं भवतः करवाणि किम् ॥ ८ ॥
मम रूक्षमिवाकर्ण्यैवं वचः स्फुरिताधरः ।
कोपाविष्ट इवोवाच तुष्टान्तःकरणोऽपि सन् ॥ ९ ॥

---

१—लघ्वाचार्य विरचिता 'पञ्चस्तवी' यस्यां क्रमशः (१) लघुस्तवः,
(२) चर्चास्तवः, (३) घटस्तवः, (४) अम्बास्तवः,
(५) सकलजननीस्तव एवं पञ्च स्तवा विद्यन्ते ।

क्वायं चेतोहरः पाठक्रमश्चेतोहरः स्वरः ।
क्व च वक्राणि रूक्षाणि वचांसि भवतः पुनः ॥ १० ॥
तथा ब्रुवाणं तमहं साकूतं प्रहसन्निव ।
वक्रदृष्टिः समं वक्रं पश्यत्रेवाऽब्रवंस्तदा ॥ ११ ॥
उवाच स पुनस्तात ! वाक्केलिकलहं त्यज ।
यदर्थमागतोऽहं तां जिज्ञासां पूरयाशु मे ॥ १२ ॥
ध्यानं पाठं मन्त्रजपं त्यक्त्वा सर्वमहं स्वकम् ।
भवत्कृतश्लोकपाठाकृष्टचित्तोऽहमागतः ॥ १३ ॥
पञ्चस्तवी गुरुमुखात् पठिता भवताऽस्ति वा ।
व्याख्याने चातुरी नाना शास्त्राऽध्ययनतोऽथवा ॥ १४ ॥
अर्थव्याख्यानसामर्थ्यं यद्यस्ति ननु कर्णयोः ।
मम पीयूषवर्षेण तर्पयेर्विश्वमातरम् ॥ १५ ॥
प्रचलन्तौ सँल्लपन्तावेवं श्रीशारिकाङ्गणे ।
प्रदक्षिणां प्रकुर्वाणौ स्थितौ तरुतले क्वचित् ॥ १६ ॥
"माया कुण्डलिनी[1]" श्लोके श्रोतुमिच्छामि साम्प्रतम् ।
व्याख्यानं सुप्रसन्नार्थं भवद्हृदयसम्म..न् ॥ १७ ॥
एवमुक्त्वोपाविशत् स द्विजस्तरुतले तदा ।
तदिच्छां सफलां कर्तुं प्रेम्णाऽहमप्युपाविशम् ॥ १८ ॥
ओमित्युक्त्वा प्रसन्नार्थां यथामति मया कृताम् ।
श्लोकव्याख्यां समाकर्ण्य तुतोष नितरां द्विजः ॥ १९ ॥
प्रोवाच स महाभागः स्मेरास्यो गूढतत्त्ववित् ।
व्याख्या भवत्कृता नूनं पाण्डित्यपरिपूरिता ॥ २० ॥

---

१—अयं श्लोकः पूर्णरूपेणेत्थं वर्तते—

माया कुण्डलिनी क्रिया मधुमती काली कला मालिनी,
मातङ्गी विजया जया भगवती देवी शिवा शाम्भवी ।
शक्तिः शङ्करवल्लभा त्रिनयना वाग्वादिनी भैरवी,
ह्रीङ्कारी त्रिपुरा परापरमयी माता कुमारीत्यसि ॥

अत्युत्तमा मनस्तोषकारिणी विदुषां परा ।
एवं व्याख्यानकृद्विद्वान् काश्मीरेऽपि न सम्प्रति ॥ २१ ॥
दृश्यतेऽथापि गूढार्थो वस्तुतो नाऽस्त्ययं खलु ।
संस्कृतज्ञो नाऽस्मि परमुर्दूं जाने च पारसीम् ॥ २२ ॥
अधीताऽस्ति मया पञ्चस्तवी गुरुमुखाम्बुजात् ।
इत्युक्त्वा विरतं तूष्णीम्भूतं प्रावोचमुत्तमम् ॥ २३ ॥
रहस्यार्थं गमयतु भवान्मां कृपयेत्यहम् ।
श्व आगमिष्यामि भवद्वसतिं तां प्रदर्शय ॥ २४ ॥
गतोऽस्तमर्कः समयो नास्तीदानीं यतः खलु ।
अहमित्युक्तवन्तं तमवोचं वसतिं निजाम् ॥ २५ ॥
भवान् दर्शयतां तत्राऽऽगमिष्यामि श्व एव नु ।
श्रुत्वैवमालीकदले प्रचलन् कुत्रचित् तदा ॥ २६ ॥
वसतौ गृहमेकं स दर्शयित्वाऽब्रवीद् वचः ।
शिवजीत्यस्ति मे नाम समेत्याऽत्रैव मां मिल ॥ २७ ॥
श्रुत्वैवं वचनं तस्य वीथीं वेश्म च चिह्नितम् ।
कृत्वा नमस्यगां "हब्बा कदले" वसतिं निजाम् ॥ २८ ॥
श्वोभूतेऽहनि सन्ध्यादि कृत्वाऽगां शिवजीगृहे ।
चत्वरे वेश्मनः स्थित्वा चिह्नितस्य समाह्वयम् ॥ २९ ॥
शिवजी शिवजीत्येवं द्विवारं सिद्धपूरुषम् ।
आह्वानसमकालं स दातुं प्रत्युत्तरं तदा ॥ ३० ॥
पूर्वकायं बहिःकृत्वा द्वारिकातः समाह्वयत् ।
द्वितीयभूमावुपरि प्रायातुं हस्तसंज्ञया ॥ ३१ ॥
स्वास्तीर्णकुतपश्रेष्ठे सोपधाने सुतूलिके ।
सुधूपधूपिते गन्धपुष्पमाल्यैरलङ्कृते ॥ ३२ ॥
द्वारिकासविधे पूते चैकतः स्वासने स माम् ।
उपवेश्य स्वादरेण चैकतः सोऽप्युपाविशत् ॥ ३३ ॥

आरक्तगौरवर्णः स तेजस्वी नाऽतिसुन्दरः ।
मिश्रकृष्णश्वेतकचस्तदानीं समदृश्यत ॥ ३४ ॥

अलक्ष्यसिद्धलक्ष्मा स मानवः सभ्यलक्षणः ।
वयसा षष्टिसप्तत्योर्मध्ये स्यादित्यलक्ष्यत ॥ ३५ ॥

कृत्वा सुस्वागतं दुग्धं संक्वाथ्याऽक्षोटसंयुतम् ।
ससितं पाययित्वा मां प्रोवाच प्रेमभावतः ॥ ३६ ॥

रहस्यार्थं दर्शयामि सावधानमनाः शृणु ।
श्रुत्वा चाऽश्रुतपूर्वं त्वं कुरु तं हृदयङ्गमम् ॥ ३७ ॥

निरुच्यार्थं समापृच्छदर्थः किं हृदयं गतः ।
न गतोऽस्तीत्युक्तवति मय्यूचे स कृपाकरः ॥ ३८ ॥

यथाऽवस्थित एव त्वमुपविष्टो हि निश्चलः ।
भव तेऽहं रहस्यार्थं गमयामि यथासुखम् ॥ ३९ ॥

एवमुक्त्वा निश्चलां स्वां दृष्टिं मयि तथाविधे ।
कृपार्द्रां पातयामास काञ्चिद्विस्मयकारिणीम् ॥ ४० ॥

कञ्चित्कालं तथा दृष्ट्वा दृष्टिमुत्तार्य माऽब्रवीत् ।
रहस्यार्थो हृदि गतो न वा वदतु सुव्रत ॥ ४१ ॥

अद्भुतं तं रहस्यार्थमनुभूय कृतार्थताम् ।
तमवोचमहं पूर्णो रहस्यार्थो मया खलु ॥ ४२ ॥

हृदयङ्गमतां नीतः कृपया भवतां परः ।
आजीवमेतदर्थेऽहं वक्ष्यामि च कृतज्ञताम् ॥ ४३ ॥

रहस्यमन्यदप्येकं पृच्छामि भवतोऽन्तिके ।
भवांस्तदपि सुव्यक्तं प्रकटीकर्तुमर्हति ॥ ४४ ॥

रहस्यं योगिसंसेव्यमिच्छा–साम्राज्यरक्षितम् ।
अनुज्ञां समवाप्याऽहं तस्याऽऽपृच्छं सुखाकरम् ॥ ४५ ॥

क्षणं स मौनमालम्ब्य गिरा मधुरयाऽब्रवीत् ।
रहस्यमेतन्नो वक्ष्ये नोचितः समयोऽधुना ॥ ४६ ॥

अस्मिन् रहस्ये विज्ञाते देहः सद्यः पतिष्यति ।
बह्वस्ति कार्यं सम्पाद्यं देहेन तव लौकिकम् ॥ ४७ ॥

मदिष्टदेवतासेवी मत्प्राणेन समोऽसि मे ।
न किमप्यस्ति तेऽवाच्यं प्रतिजाने तवाग्रतः ॥ ४८ ॥

अवोचं तमहं श्रुत्वा तदुक्तं प्रेमभावतः ।
अन्तःस्निग्धां बहिर्वक्रां कर्णपीयूषभारतीम् ॥ ४९ ॥

विश्वमात्रा समाकृष्य मत्सदेशे भवान् यया ।
सम्प्रापितः सैव पुनः कृपां मयि करिष्यति ॥ ५० ॥

भवन्तं न गतोऽन्वेष्टुमहं मत्सविधे पुनः ।
भवानेवागतः श्लोकरहस्यार्थमुवाच यः ॥ ५१ ॥

प्रापय्य यं कञ्चनान्यं प्रेषयिष्यति विश्वमा ।
मदिष्टं प्रकटीकर्तुं काऽपि चिन्ताऽस्ति मे नहि ॥ ५२ ॥

श्रुत्वैवं मद्वचः सोऽपि पश्यन् गम्भीरया दृशा ।
नाऽहं प्रतारये सत्यं वच्मि कालोऽस्ति नाधुना ॥ ५३ ॥

योग्य इत्येव नाऽवोचं भवत्पृष्ट–सदुत्तरम् ।
इत्युक्त्वा क्षणमास्थाय मौनं वार्तान्तरं व्यधात् ॥ ५४ ॥

वार्तान्तरैर्जागतिकैः कोऽपि कालो व्यतीतवान् ।
एवं यामत्रयं तेन गतं सँल्लपतो मम ॥ ५५ ॥

ततश्चाज्ञां सुप्रसन्नाद् गृहीत्वा वसतिं निजाम् ।
समागत्य प्रदोषस्य यथावत्पारणां व्यधाम् ॥ ५६ ॥

जालन्धरं भगवतीपीठं द्रष्टुं मनस्यभूत् ।
विचारः कोऽपि तेनाऽहं मनस्येवं व्यचिन्तयम् ॥ ५७ ॥

पञ्चाम्बुगमनादूर्ध्वं काश्मीरे पुनरागमः ।
कदा मे स्यादिति ज्ञातुं मया नैव तु शक्यते ॥ ५८ ॥

एकवारं पुनस्तस्य पुरुषस्य महात्मनः ।
दर्शनं कर्तुमर्हामि शिवजीत्यभिधावतः ॥ ५९ ॥

गतान्येवं चिन्तयतः कानिचिद्दिवसानि मे ।
अन्येद्युरथ तं द्रष्टुमहं तद्वसतावगाम् ॥ ६० ॥

सैव वीथिस्तदेवासीद्वेश्माऽपि खलु चिह्नितम् ।
परं नासीत्तत्र कोऽपि शिवजीत्यभिधानवान् ॥ ६१ ॥

शिवजी शिवजीत्येवमाह्वयन्तं पुनः पुनः ।
नरा नार्यश्च तत्रत्या अब्रुवन् विस्मयान्विताः ॥ ६२ ॥

कमाह्वयति कुत्रत्यः कीदृशः स नरः खलु ।
मन्यामहेऽत्रागतवान् विस्मृत्य वसतिं भवान् ॥ ६३ ॥

वेश्म तद्यन्त्रितं कोऽपि नरो वसति नात्र हि ।
नृशून्यस्यास्य गेहस्य स्वाम्येकाकी पुनर्युवा ॥ ६४ ॥

देशान्तरे विश्वविद्यालये पठति साम्प्रतम् ।
कीलयित्वा यन्त्रितानि कोष्ठान्यस्मिन् गृहे किल ॥ ६५ ॥

तेषामन्यतमः कश्चित्सर्वं गेहमदर्शयत् ।
नीचैरुपरिपर्यन्तं गत्वा यन्त्रित—कोष्ठकम् ॥ ६६ ॥

त्रिभूमं तद्गृहं सर्वं दृष्ट्वाऽहं विस्मयान्वितः ।
घटितं सर्ववृत्तान्तं पुनस्तेभ्यो न्यवेदयम् ॥ ६७ ॥

सर्वेऽप्याकर्ण्य वृत्तान्तं ते विस्मयान्वितमानसाः ।
श्रीशारिका - कृपामुक्त्वा गन्तुं मामनुमेनिरे ॥ ६८ ॥

वृत्तमेतद्यथाभूतं यस्मै यस्मै न्यवेदयम् ।
स स सर्वोऽप्यवोचन्मां जगदम्बाविजृम्भितम् ॥ ६९ ॥

नराः काश्मीरवास्तव्याः कत्यपि ब्रुवते स्म माम् ।
धन्योऽस्ति कृतकृत्योऽस्ति भूरिसौभाग्यवान् भवान् ॥ ७० ॥

प्रदक्षिणां प्रकुर्वाणैः श्रीशारी—पर्वताजिरे ।
सौभाग्यशालिभिः पुम्भिः कृतपुण्यैः कदा कदा ॥ ७१ ॥

योगिनी—सिद्ध—सम्मेलवन्त्यो विस्मयकारिकाः ।
भवन्त्येवंविधाः पुण्या घटना बहुभिः समम् ॥ ७२ ॥

तदा प्रभृत्यद्य यावत् स लोचनपथाऽतिथिः ।
अपेक्ष्यमाणोऽप्यभवज्जातु नो सिद्धमानवः ॥ ७३ ॥
वृत्तमाश्चर्यजननमनुभूय नमाम्यहम् ।
भस्माच्छन्नं वह्निमिव तमपि प्राप्तगौरवम् ॥ ७४ ॥
ज्ञातं मया तदा सम्यक् स्वनिवासाऽप्रदर्शने ।
जिज्ञासायां मद्वसतेः कारणं तन्महात्मनः ॥ ७६ ॥
वैमल्यं पूर्णमासाद्य नादज्ञातार्त्ति–हृत्पथः ।
वरिष्ठो ब्रह्मवित्स्फारकलां वेत्ति महाबलः ॥ ७६ ॥
इति गुह्यतमं सिद्धोपदिष्टं प्रकटीकृतम् ।
रहस्यं श्लोकमात्रेण रमन्तामत्र पण्डिताः ॥ ७७ ॥
घटितं वृत्तमेतद्धि सिंहाधिप(१९८७)मिते गते ।
वैक्रमेऽब्दे भाद्रशुक्लत्रयोदश्यां मया सह ॥ ७८ ॥

श्रीशारिकायाः शुभ–पर्वताजिरे,
प्रदक्षिणायां मिलितं स्वभावतः ॥
रहस्ययोगं किल शून्यवेश्मनि,
यो मे ददौ सिद्धनरं नमामि तम् ॥ ७९ ॥

नभ्रनभ्र(२०२०)मित वैक्रमेऽब्दके,
कृष्णजन्म–दिवसेऽब्जवासरे ॥
दृब्धवानमृतवाग्भवो गिरा,
सिद्धदर्शनमिदं सुपर्वणाम् ॥ ८० ॥

बक्शी छिब्बर इत्याख्य—
वैष्णवीदास–वेश्मनि ॥
इन्द्रप्रस्थे देववाण्यां,
निबद्धेयं कृतिः शुभा ॥ ८१ ॥

इति श्रीमदमृतवाग्भवस्य कृतिः

## ॥ श्रीसिद्धमानवदर्शनम् ॥

——०——

# पुस्तकपरामर्शविमर्शः

श्री एन्० एस्० रामानुजताताचार्यः

इह जगति संस्कृभाषासम्बन्धिन्यः बह्वचः पत्रिकाः प्रकाश्यन्ते । तासु शास्त्रीयाः इतरे च बहवो विषयाः तैस्तैर्विद्वद्भिः विलिखिताः पदं लभन्ते । तथा 'पुस्तकपरामर्शः' इति शीर्षकाङ्कितः कश्चिद्भागोऽपि कासुचिदनुसन्धानपत्रिकासु भवति यत्र नूतनतया मुद्रापितानां पुस्तकानां परामर्शः क्रियते । परामर्शवेलायां पुस्तकेषु विद्यमानानां गुणानां दोषाणां चोत्कीर्तनं क्रियते । गुणानां कथनेऽकथनेऽपि वा अवश्यमवरत एको वा दोष उद्भावनीय इत्ययं सम्प्रदायः परामर्शकैराद्रियमाणः पुस्तकपरामर्शभागे शक्योऽवलोकयितुम् । केचन परामर्शकाः वस्तुतोऽविद्यमानमपि दोषं पूर्वोक्तसम्प्रदायपरिपालनबुद्धया वा ग्रन्थकर्तर्यसूयादिना वा प्रकाशयन्तीत्यपि क्वचित् पश्यामः । एतत्तु सर्वथा अनुचितम् ।

"दूष्यं वचो मम परं निपुणं विभाव्यं,
भावावबोधविहितो न दुनोति दोषः ।"

इति रघुनाथशिरोमण्युक्तरीत्या ग्रन्थकर्तुर्भावमवबुध्य विद्यमानस्य दोषस्य प्रकाशनं सहृदयो ग्रन्थकर्ता नूनमाद्रियेत । अविद्यमानस्य दोषस्य उद्भावनं तु न कोऽपि विद्वान् सहेत । पुस्तकपरामर्शेषु एवमपि क्वचिद् भवतीति तत्र पत्रिकासम्पादकप्रकाशकैर्जागरूकैर्भवितव्यम् इत्येतत्तत्त्वाविर्भावायैव लेखोऽयं मया लिख्यते ।

तिरुपतिस्थेन केन्द्रीयसंस्कृतविद्यापीठेन १९७२ तमे संवत्सरे नागेशभट्टविरचितत्वेन सम्भाव्यमानः 'ज्ञापकसंग्रहाभिधानो' ग्रन्थः मदीयविवृत्याख्यव्याख्यासमेतः मुद्राप्य प्रकाशितः । अस्मिन् ग्रन्थे परिभाषाव्यतिरिक्तानि ज्ञापकसिद्धानि महाभाष्योपनिबद्धानि वचनानि सङ्कलितानि । अयं ग्रन्थो दक्षिणापथे अपरनागेशत्वेन प्रख्यातैः महामहोपाध्यायैः श्रीमुष्णम् सुब्बरायाचार्यैः नागेशकृतत्वेनोक्तः तत्पुत्रैः महामहोपाध्यायैः सेतुमाधवाचार्यैः श्री आर० पार्थसारथिभट्टाचार्याणां हस्ते मुद्रणार्थमर्पितः पंचाशद्वर्षेभ्यः पूर्वं भट्टाचार्यैः आन्ध्रलिप्यां मुद्रापितश्चाधुना दुर्लभो जातः । सूत्रतुल्यः दुरवगमश्चायं ग्रन्थः सरलविस्तृतव्याख्यया सह मुद्रापणीय इति भट्टाचार्यैः प्रेरितोऽहं सावधानं महाभाष्यादिग्रन्थालोडनपूर्वकं व्याख्यानं विलिख्य तेन सह विद्यापीठद्वारा प्राकाशयम् । प्रकाशनसमारोहश्च भूतपूर्व उपशिक्षामन्त्रिणां डि० पि० यादवमहोदयानामाध्यक्ष्ये सम्पन्नः । तस्मिन् समये डा० रामकरणशर्मप्राध्यापकश्रीकृष्णशर्मप्रभृतिभिर्बहुधा प्रशंसितोऽयं ग्रन्थः । तस्मिन् ग्रन्थे उपोद्घाते 'अयं ग्रन्थो नागेशकृत इत्यत्र नास्ति प्रबलं प्रमाणम् । तथापि उद्योतेन सह बहुत्र सादृश्योपलम्भात् अस्त्यवकाशः

## विद्यापीठ के महत्वपूर्ण प्रकाशन

| | | |
|---|---|---|
| १. काश्मीरेतिहासः | पं० श्रीहनुमत्प्रसादशास्त्री | 15.00 |
| २. गीतिकादम्बरी | श्रीअमीरचन्द्र शास्त्री | 20.00 |
| ३. अध्वरमीमांसाकुतूहलवृत्ति भाग I | सं० श्रीपट्टाभिरामशास्त्री | 30.00 |
| ४, ,, भाग II | ,, | 30.00 |
| ५. ,, भाग III | ,, | 15.00 |
| ६. ,, भाग IV | ,, | 31.00 |
| ७. पाणिनि, कात्यायन एण्ड पतञ्जलि | श्री के० माधवकृष्ण शर्मा | 15.00 |
| ८. ऋग्वेदकविविमर्शः | डॉ० मधुकर गो० माईणकर | 3.00 |
| ९. पञ्चामृतम् | पांच विद्वानों के भाषणों का संग्रह | 15.00 |
| १०. प्रमाणप्रमोदः | म० म० चित्रधरशर्मा, सं० श्रीमती उज्ज्वला शर्मा | 7.50 |
| ११. नित्यकर्मप्रकाशः | श्री भवानीशंकर त्रिवेदी | 4.00 |
| १२. संस्कृत-साहित्य में शब्दालङ्कार | डॉ० रुद्रदेव त्रिपाठी | 40.00 |
| १३. ऋतु इन संस्कृत लिटरेचर | डॉ० वी० राघवन् | 30 00 |
| १४. रससिद्धान्तः | डा० नगेन्द्र, अनु० श्रीअमीरचन्द्र शास्त्री | 15·00 |
| १५. बौद्धालङ्कारशास्त्रम् | अनु० तथा सं० डॉ० ब्रह्ममित्र अवस्थी | 15-00 |
| १६. सञ्चारी भावों का शास्त्रीय अध्ययन | डॉ० रघुवीरशरण व्यथित | 20.00 |
| १७. अध्यनन-माला | (प्रथम कुसुम) | 10.00 |
| १८. प्रवचन-परिजातः | दो विद्वानों के भाषणों का संग्रह | 6.00 |
| १९. चान्द्रव्याकरणवृतेः समालोचनात्मकमध्ययनम् | डॉ० हर्षनाथमिश्र | 23.00 |
| २०. महामहोपाध्यायश्रीपरमेश्वरानन्दनशास्त्रि-स्मृतिग्रन्थ | | 35.00 |
| २१. भाषणभूषण—६ भाषणों का संग्रह | | 1.25 |
| २२. राघवाह्निकम् (गेयकाव्य) | सं० तथा अनुवादक डॉ० रुद्रदेवत्रिपाठी | 1.00 |
| २३. जीवन-परिमल (म० म० श्रीपरमेश्वरानन्द शास्त्री का जीवन-चरित एवं संस्मरण) | लेखक डॉ० रुद्रदेव त्रिपाठी | 3.00 |
| २४. रससीमांसा (सटीक) | अनुवादक डा० रुद्रदेव त्रिपाठी | 1.25 |
| २५. देवीपुराणम्(आलोचनात्मक संस्करण) | स. डॉ० पुष्पेन्द्रकुमार शर्मा | 40.00 |
| २६. श्रीमहावीर परिनिर्वाणस्मृतिग्रन्थ | प्र० सं० डॉ० मण्डन मिश्र | 21.00 |
| २७. श्रीमहावीर—चरितामृतम् | डा०रुद्रदेव त्रिपाठी | 1.0) |
| २८. कृष्णयजुर्वेदीय तैत्तिरीय संहिता, सायणभाष्य अनुवाद | | यन्त्रस्थ |
| २९. अन्वेषणा | प्र०सं० डॉ० मण्डनमिश्र | 33 00 |
| ३०. व्याख्यान-वल्लरी | सम्पादक डॉ० रुद्रदेव त्रिपाठी | 4.00 |
| ३१. चित्रबन्धावतरिका | सम्पादक एवं अनु० डॉ० रुद्रदेव त्रिपाठी | 2.50 |
| ३२. शाङ्करस्तोत्रद्वयम् | प्र. सं डॉ०सी आर० स्वामिनाथन | 1.00 |
| ३३. धूर्तनर्तकम् (प्रहसनम्) श्रीसामराजदीक्षित कृत मूल | स०-श्रीबाबूलालशुक्ल | |

प्राप्ति स्थानः—

**श्रीलालबहादुरशास्त्री केन्द्रीय संस्कृत विद्यापीठ**

१/६ शान्तिनिकेतन, नई दिल्ली-२१